त्वं ॥ स्नेहो जलवृत्ति तद्द्विविधं नैमित्तकं नैसर्गिकं ॥ तेजसोर्घृतादिसुवर्णयोरग्निसंयोगेन
द्रवत्वं तन्नैमित्तिकं जले नैसर्गिकं स्नेहः स्निग्धकरणता जलमात्रवृत्तिः अणुकादौ कारणगुण
पूर्वकः गुरुत्वादिवत् अपाकजरूपभावीशब्दः श्रोत्रग्राह्यः आकाशस्यविशेषगुणः ननु कथम
स्य श्रोत्रेण ग्रहणं यतो भेर्यादिदेशे शब्दो जायते श्रोत्रं तु पुरुषदेशे किमत्र स्यम् भेरीदेशे जा
तः शब्दो वीचीतरंगन्यायेन कदंबमुकुलन्यायेन वा समुत्पादितं शब्दान्तरमिति क्रमेण श्रो
त्रदेशे जातोऽन्त्यः शब्दः श्रोत्रेण गृह्यते नाद्यो नापि मध्यमः भेरीशब्दो मया श्रूयते इति प्रतीतिर्
भ्रान्तैव भेरीशब्दोत्पत्तौ भेर्याकाशसंयोगोऽसमवायिकारणं भेरीदंडसंयोगो निमित्तकारणं
आकाशं समवायिकारणम् वंशोत्पाट्यमानवटपटशब्दोत्पत्तौ वंशदलाकाशविभागोऽस
मवायिकारणं वंशदलद्वयविभागो निमित्तकारणं आकाशं समवायिकारणम् तेनाद्यः शब्दः
संयोगजो विभागजो वा अन्त्यमध्यशब्दास्तु आकाशसमवायिकारणकाः अनुकूलवातनिमित्ताः

तथाचोक्तम् संयोगाद्विभागाद्वा शब्दाच्छब्दनिष्पत्तिः आद्यादीनां शब्दानामाकाशमेव समवायिकार
णं कर्णबुद्धिवत् निदर्शनावस्थायित्वं अन्त्योपान्त्यमशब्दः स्वकार्यशब्दनाश्याः अत्र कश्चिदाह इति अं
त्यस्य द्वितीयक्षणानुगामित्वात्तृतीयक्षणे चासत्तोत्यनाशजननासंभवात् तस्माद्विनश्यदवस्थेनै
वोपांत्येनांत्यनाशजननं तु करं अत्र यथाकचित्वादीनां नाश्यनाशकभावो न स्यात् इदं तु फलबला
देव कल्प्यते तस्मादुपांत्यनाशादंत्यनाश इति विनाशित्वं शब्दस्यानुमानात् तथाहि शब्दोनि
त्यः सामान्यवत्वे सत्यस्मदादिबाह्येन्द्रियप्रत्यक्षत्वहेतुः प्रत्यक्षादिस्पृत्वमाने आत्मनि व्यभिचारस
स्तोबाह्येन्द्रियेति एवमपि योगिबाह्येन्द्रियग्राह्ये परमाणौ व्यभिचारः स्यादित्यतो योगिनिरासार्थम
स्मदादीति किं पुनर्योगिसद्भावे प्रमाणमुच्यते परमाणवः कस्यचित्प्रत्यक्षाः प्रमेयत्वात् घटवत्
यस्य प्रत्यक्षाः स योगी तथा सामान्यादिना व्यभिचारः स्यादित्यत उक्तं सामान्यवत्वे सतीति सामान्य
दित्रयस्यानिःसामान्यत्वात् अर्थप्रकाशो बुद्धिः सा च द्विविधा नित्यानित्या च नित्या ईश्वरी बुद्धिः अ

प्रोऽपि कारकः सत्प्रतिपक्षिक प्रो हेत्वाभासः एवं यत्र व्यभिचारादयः ते पुनर्व्याप्तिपक्षधर्मताविशिष्टहेतुस्व रूपज्ञप्रभावेन युक्ताः असिद्धादयो दोषदुष्टज्ञप्तिकारका इति यावत् तथा च तः सोऽसिद्धस्त्रिविधः आश्र यासिद्धः स्वरूपासिद्धो व्याप्यत्वासिद्धश्चेति तत्र यस्य हेतोराश्रयो नावगम्यते स आश्रयासिद्धः यथा गग नारविंदं सुरभि अरविंदत्वात् सरोजारविंदवदिति अत्र हि गगनारविंदमाश्रयः स तु नास्त्येव अ यमप्याश्रयासिद्धः तथा हि घटोऽनित्यः कार्यत्वात् पटवत् ननु आश्रयस्य सत्वात् कार्यत्वादिति हेतुर्ना श्रयासिद्धः सिद्धसाधनं तु स्यात् सिद्धस्य घटानित्यत्वस्य साधनात् नैव तत् हि स्वरूपेण कश्चिद् आश्रयो न वस्त्वनुमानस्य किं तु संदिग्धसाध्यधर्मत्वेन तथा चोक्तं नाप्रकृता नानुपलब्धे न निर्णीतेर्थे पि तु सं दिग्धधर्मे न्यायः प्रवर्तते न च घटे ऽनित्यत्वसंदेहोस्ति अनित्यत्वस्यानिश्चितत्वात् तेन स्वरूपेण पक्ष विपक्षो वर्तते तथापि अनित्यत्वसंदेहाभावात् नाश्रयता इति तस्मात् आश्रयासिद्धत्वात् हेतुः स्व स्वरूपासिद्धस्तु उच्यते यो हेतुराश्रये नावगम्यते यथा सामान्यमनित्यं कृतकत्वात् कृतकत्वहेतुरा श्रय

न्यूनाधिकापसिद्धांतहेत्वाभासपंचकं चेत्यष्टौ इति गुरुः ॥ उभयसाधनवती विजिगीषुकथा जल्पः सैव यथा
संभवं सर्वनिग्रहस्थानानामधिकरणं परपक्षे दूषिते स्वपक्षसाधनपर्यवसान प्रजल्पः सैव य
थासंभवं स्वपक्षस्थापनाहीना वितंडा परपक्षदूषणमात्रावसाना नास्य वैतण्डिकस्य स्थाप्यः स्वपक्षोस्ति
कथा नाम नानावक्तृकः पूर्वोत्तरपक्षप्रतिपादकवाक्यसंदर्भः ॥ उक्तानां पक्षधर्मत्वादीनां रूपाणां म
ध्ये एकेनापि रूपेण हीना असिद्धहेतवस्तेपि कतिपयरूपयोगाद्धेतुवदवभासमाना हेत्वाभासाः ते चा
सिद्धविरुद्धानैकान्तिकप्रकरणसमकालात्ययापदिष्टभेदात्पंचैव अत्रोदयनेन व्याप्यस्य हेतोः पक्ष
धर्मतयाप्रतीतिः सिद्धस्तदभावोऽसिद्धिरिति असिद्धलक्षणमुक्तं तच्च यद्यपि विरुद्धादिष्वपि संभव
तीति सांकर्यं प्रतीयते तथापि प्रधानसांकर्यं तु ॥ उभयोरपि यत्र साधनदोषः पुरतः स्फुरति स सिद्धि
रप्रदुष्टज्ञप्तौ स एव दुष्टज्ञप्तिकारको दूषणमिति यावत् नान्यस्तेनैव पुरः स्फूर्तिके न दुष्टज्ञप्तौ जातायां
कार्यापर्यवसाने ज्ञाते तदुपजीविनोऽन्यस्यानुपयोगात् तथा च सति यत्र विरोधः साध्यविपर्ययव्या